जन्मसिद्धाः पुनस्तेभ्यः संख्येयगुणताभृतः । कर्मभोगधरा वार्धिद्वीपोर्ध्वाधस्तिरोभुवाः ॥२०॥
सिद्धानामूर्ध्वसिद्धाः स्युः सर्वेभ्योल्पे परेन्यथा । युः संख्येयगुणास्तेभ्योधस्तिर्यग्भिर्वृताः क्रमात् ॥
समुद्रे सर्वतः स्तोका द्वीपे संख्येयसंगुणाः । लवणोदे समस्तेभ्यः स्तोकाः सिद्धा विशेषतः ॥२२॥
कालोदे सागरे जंबूद्वीपे च परिनिर्वृताः । धातकीखंडसद्वीपे पुष्करद्वीप एव च ॥ २३ ॥
ते संख्येयगुणाः प्रोक्ताः क्रमशो बहवोन्यथा । प्रत्येतव्याः समासेन यथागममशेषतः ॥२४॥
एक एव तु सिद्धात्मा सर्वथेति यके विदुः । तेषां नानात्मनां सिद्धिमार्गानुष्ठा वृथा भवेत् ॥२५
क्षेत्राद्यपेक्षया चोक्तां संसार्येकत्वमंजसा । एकात्मवादिना चैवं तत्र वाचोऽप्रमाणता ॥२६॥
निःशेषकुमतध्वांतविध्वंसनपटीयसी । मोक्षनीतिरतो जैनी भानुदीप्तिरिवोज्ज्वला ॥ २७ ॥
एवं जीवादितत्त्वार्थाः प्रपंच्य समुदीरिताः । सम्यग्दर्शनविज्ञानगोचराश्चरणाश्रयाः ॥ २८ ॥
ततः साधीयसी मोक्षमार्गव्याख्या प्रपंचतः । सर्वतत्त्वार्थविधेयं प्रमाणनयशक्तितः ॥ २९ ॥

तदेवं शास्त्रपरिसमाप्तौ परममंगलं निःश्रेयसमार्गमेव मंगलमभिष्टोतुमनाः प्राह;—

जीयात्सज्जनताश्रयः शिवसुधाधारावधानप्रभु-
ध्वंस्तध्वांततति: समुन्नतगतिस्तीव्रप्रतापान्वितः ।
प्रोज्ज्योतिरिवावगाहनकृतानंतस्थितिर्मानतः
सन्मार्गस्त्रितयात्मकोऽखिलमलप्रज्वालनप्रक्षमः ॥ ३० ॥

इति दशमाध्यायस्य द्वितीयमाह्निकम् ।

इति श्रीविद्यानंदिआचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालंकारे दशमोऽध्यायः समाप्तः ॥ १० ॥

